यद्वेवैताः समिध ऽआदधाति । एतद्वा ऽएनं देवाः सर्व्वं कृत्स्नꣳ संस्कृत्यायैन मेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैन मय मेतत् सर्व्वं कृत्स्नꣳ संस्कृत्यायैन मेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युप्ता सर्व्वाꣳ रात्रिं वसन्ति तस्योक्तो बन्धुरुद्देन मुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्म्मो गृहे हविरिति यथैव* यजुस्तथा बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोतीति तत् षट् तस्योक्तो बन्धुः ॥ ७ ॥ १ ॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. २.]

प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रवेष्टुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते— "प्रत्येत्याग्नि मिति । प्रहरिष्यन् प्रविष्टन्नित्यर्थः । विहित

* 'यथा यजुस्तथा'—इति ग, ख ।

होम आहवनीयप्रदेशं समिद्धस्याग्नेः * अपनाय पुरस्तादेवैन † सम्पादयत इत्याह एतद्वा एन मित्यादिना आहुतिभिः समिद्धिवेत्येतदनेनेत्यस्य विशेषणं आहुति समिद्रूपेणे नेनेत्यर्थः । आहुतिभि र्जुहोती सामान्येन विधानात् कथं होमप्रकार इत्यपेक्षया आह — "स वै पञ्च गृहीत मिति । आज्यं पञ्चगृहीतं यथा भवति तथा गृह्णीतेत्यर्थः । तस्य तु "पञ्च वा ऋतवः" ‡ इत्यादिकं ब्राह्मणं प्रागुक्तम् । अनेन पञ्चगृहीतेनाज्येनैकाहुतिं सम्पादयेत् ॥ १ ॥

अथ षोडशगृहीत माज्यं गृह्णीते, अष्टौ प्राणा अष्टावङ्गानीत्येते: § षोडशावयवः प्रजापतिः अय च क्रियमाणोऽग्निः प्रजापत्यात्मकः अतस्तस्य षोडशगृहीतं मात्मसदृश मन्नं न भवतीति तदुपितैरेवात्रैनं प्रीणाति । लोके हि यदेवान्न मात्मसंहितं तदेव रक्षति न च हिनस्ति भूयो हिंसकत्वादल्पस्य त्वपर्याप्तत्वेनारक्षकत्वादिति । अत्र षोडश गृहीतं समं विभज्य द्वे आहुती क्रियते । अतयाहुतिभेदेन पृथगेव ग्रहणप्रसक्तावाह,— "समान्या मिति । समान्या मेकया मेव स्रुचि गृह्णीत-

---

* 'समिध्यासाग्नेः'—इति क, 'समिध्यमाने,'—इति ख, 'समिध्यतान्ने:'—इति ग घ।

† 'पुरस्तादेवैन'—इति क ग घ।

‡ इहैव पुरस्तात् ८ ४ १ ।

§ 'अष्टावङ्गानीत्येते'—इति क, 'अष्टावङ्गानीत्येते'—इति घ।

षोडशगृहीत माज्यं सहैव गृह्णीयादित्यर्थः । आहुतिभेदेऽपि तत्र मेकं गृह्णात इत्यत आह— "समानो होति ।" एतेन षोडशगृहीतेनाज्येन यं प्रीणाति तस्याग्नेरेकत्वादित्यर्थः । प्रकृतेन षोडशगृहीतेनाज्येन साध्यौ द्वौ होमाविति दर्शयत् मन्त्रे वर्णिता देवता सम्बन्धस्याग्नये प्रकृतहोमे समवेतार्थ माह— "वैश्वकर्मणाभ्या मिति । वैश्वकर्मणशब्द तद्धितादि धर्मस्वत्वकर्मनामधेयं अग्नेः प्राजापत्यात्मकत्वेन विश्व विषय-कर्मवत्वाद्विश्वकर्मत्वम् । पञ्चगृहीतेनाज्येनैकाहुतिः षोडश गृहीतेन द्वे आहुती इति । तिस्र आहुतयः सम्पद्यन्ते सा च त्रित्वसङ्ख्यासकलस्य अग्नेस्तृप्ति हेतु र्न भवतीत्याह,— "तिस्र आहुती र्जुहोति त्रिवृदग्नि रिति । आहुतीश्च जुहोति समिधश्च दधातीति होमद्वय मपि सामान्येन विहितम् । तत्राज्याहुतीनां होमप्रकारोऽभिहितः ॥ २ ॥

अथ समिधां होमे विशेष मभिधातु माह— "अथ समिध इति ॥ यथा तर्पयस्वेति लोके जनः किञ्चित् पुरुष मन्येन तर्पयित्वा पश्चादन्नविशेषाणां परिवेषणं करोति तद्वदेवात्र -मपि समिद्धोमो भवति । आज्याहुतिलक्षणस्यान्नस्य प्रथमं सम्पा-दितत्वादित्यर्थः । परिवेविष्यादित्यपि यङ्लुगन्तस्य सिद्धि रूपं तात्र समिध औदुम्बर्यो भवेयु रित्याह— "औदुम्बर्य इति । उदुम्बरस्य ऊर्ग्रसात्मकत्वात्तेनैवैनं प्रीणातीत्याह— "ऊर्ग्वा इति । एतद्वै वनस्पतीना मित्यादिकस्यात्र मर्थः । आर्द्राः आर्द्रत्वं गुण इति यत् एतद्वनस्पतीना मार्द्रं मनुप्रहतं जीवं

आर्द्रेतराणा मुपजीवत्वात् ; अत आर्द्राभिः समिद्भि र्होमे तेन जीवेनैनं प्रीणाति। अग्नौ ह्रूयमानस्य हुतस्य समिदादिवद् भक्षी भावात्। केवलं ज्वालारूपेण परिणामादाग्ने रप्रैर्ध मतएव श्रूयते। एतद्वा अग्नेः प्रियं धाम यदाज्य मिति (ताः समिधः पूर्वेद्युरानी सर्वस्या मेव हुते वसन्ति। सर्वां रात्रितोत्य-क्यमां योगे द्वितोया तत्तथा नियामे हि) * ताः रसेन सम्पन्ना भवन्तीति। अत स्तथाविधाभि समिद्भि र्होमे स्वकीयेन रसरूपेण तापनेन मग्नि प्रीणितवान् भवतीति। "समिध आदधातीति। सामान्येन बहुत्वविधाना .त्त्विस्रोपि पर्यवसान माह— "तिस्र इति। ताश्च त्रित्वसङ्ख्यां सकलाग्निप्रीतिहेतुत्वेन प्रशंसति ॥ ३ ॥

"यद्वैवैता इति। समस्कुर्वन्निति आहवनीयरूपतानुगुण-संस्कार विशिष्ट मकुर्वन्नित्यर्थः ॥ ४ ॥

तत्र प्रथमाहुत्यर्थं पञ्चधार ग्रहणं अग्नेः शीर्षस्य प्राण-पञ्चको नमरूपेण प्रशंसति— "स वै पञ्च गृह्णीत मिति। वा-गिति वागिन्द्रि मुखं प्राण इति घ्राणं चक्षुर्द्वयं च द्वौ प्राणौ एते मनःसहिता वागादयः शिरसि पञ्चविधिताः प्राणः अतश्च पञ्चधार-ग्रहणेनास्मिन्नग्नेः शिरसि मनःप्रभृति प्राणपञ्चकं निदधाति। होममन्त्रस्य तिग्मपदसम्बन्धं प्रशंसति— अग्नेस्तिग्मेनेतिग्म-शब्दस्य तैक्ष्ण्यवाचकत्वात् तद्वत्या ऋचा होमेन तैक्ष्ण्यासिद्ध-येऽग्नेः शिरस्तीक्ष्णं करोति पश्यन्तीति श्यो तनूकरणे अस्मा-च्छटिश्यतिर्नुतः श्यतीत्योकारलोपः। अथ तत्राहुति द्वयार्थं

* वक्ष्यमीचिह्नाभ्यां प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति।

षोडशधाग्रहणं प्रशंसति, (प्राणिनामष्टावङ्गानि । एतासां सम्पदमभिनन्द्य षोडशगृहीतस्य ग्रहणं पक्षिवन्तौ प्राणापान-दर्शं सम्पादनार्थं षोडशवारं गृह्णीत इत्यर्थः । एकस्मिन्नेव शरीरे अङ्गानां प्राणानामावस्थानात् षोडशगृहीत मेवत्तु विगृह्णीते *) होमन्तु पृथगेव करोति । एवं च अङ्गानां प्राणानाञ्च विधृतिं विभेदेन धारणं ममाङ्गोर्णतां करोति । तयो होमयो र्वैश्वकर्मणत्वाद्विश्वकर्मशब्दाभिधेय मग्निं संस्करोति । आहुतीनाञ्च त्रित्वात्त्रिवृतोऽग्नेः सकलस्यापि संस्कारं सम्पादयति । अनिसृष्टमेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडश गृहीतार्द्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभि † हूयते । अतएव कात्यायनः ;— "पञ्च गृहीतं जुहोत्यनिसृष्टमेनेत्यृचा षोडशगृहीतार्द्धं मनुवाकशेषेण" "चक्षुषः पितेत्य परमनु वाकेन"—इति ‡ । एवं सर्वाः सम्भूय सप्तदश भवन्ति ता एतान् सप्त्या दशधाग्निसंस्कारहेतुत्वेन प्रशंसति,— "सप्तदशभि रृग्भिरिति । प्रजापतेः सप्तदशत्वं तैत्तिरीयके श्रुतम्,—"आश्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः"—इति § ।

---

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र ।

† "पितेत्यादिभिर्हूयते"—इति ज ।

‡ का० श्रौ० सू० १८ ३ १३-१४ ।

§ तै० ब्रा १, ५, ११ ।

अथवा अष्टौ प्राणा अष्टावङ्गानि स्वय मेक इति सप्तदशात्मक मिलितां अङ्गसङ्ख्यां प्रशंसति,— "एकविंशति गृह्णीतेन त" । "द्वादश मासा पञ्चर्त्तव स्त्रय इमे लोका असावादित्य एकविंश' एता मभिलक्ष्य एकविंशति गृह्णीतेन हूयते । एतस्याग्नेर्यथोक्तैकविंशात्मकत्व सम्पादनायैकविंशति गृहीतेन होम इत्यर्थ ॥ ६ ॥

अथ समिधां होम प्रकारान्तरेण प्रशंसति,— "यद्वेवैता इति । अर्थ यथा तर्पयित्वा पाययित्वादिति आज्याहुतिलक्षणेनान्नेन तर्पितस्याग्ने समिद्धोम परिवेषणवद्भवतीति प्रशंसित । इदानीन्तु एकविंशति गृहीत होमेन एकविंशत्यात्मकत्व सम्पादनात् कात्स्न्येन सस्कृतस्याग्नेरन्नरूपेण प्रशस्यत इति न पौनरुक्त्यम् । सर्वमित्यस्यैवार्थ कथन कात्स्न्य मिति "औदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ता सर्वा रात्रि वसन्ति"—इति यदस्ति तस्य अर्थो उदुम्बर इत्यादिरूप ब्राह्मण मनन्तर मेवोक्त तदेवानुसन्धेयेत्यर्थ । प्रकृतानां समिदाहुतीनां मन्त्रा निगदव्याख्याता इत्याह—'उदेन मुत्तरान्नयेति *। "उदेन मुत्तरान्नयेत्यादिक प्रथमो मन्त्र , "इन्द्रेम प्रतरान्नयेत्यादिको द्वितीय † "यस्य कुर्मो गृहे हविरित्यादिक स्तृतीय ‡, एतेषां यथा मन्त्रस्य तथैव ब्राह्मण स्पष्टार्था इत्यर्थ । "तिस्र समिध' इत्येत

---

* वा॰ सं॰ १७ ५० ।
† वा॰ सं॰ १७ ५१ ।
‡ वा॰ स॰ १७ ५२ ।

दुक्तार्थे चाज्यसमिदाहुति सङ्ख्यां भूयः स्तौति— "तिस्र आहुति रिति। प्रकृतत्वात्तिस्र. समिध आदधातीति सम्बध्यते, एवं षट् सङ्ख्यां सम्पद्यन्ते तद्ब्राह्मणं–"षड् वा ऋतव" इत्यादि-रूपं प्रागुक्त मित्यर्थः * ॥ ७ ॥ २ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति नवमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥

---

* पुरस्तात् ८ ५ १ ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम् ।

---

॥ हरिः ॐ ॥

अथातः सम्प्रैष्यति । उद्यच्छेध्ममुपयच्छोपयमनीरग्नये प्रक्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूदेहि* ब्रह्मन्प्रतिरथं जपेति ॥ १ ॥

एतद्वै देवानुपप्रैष्यत । एतं यज्ञं तꣳस्यमानान् दक्षिणतोऽसुरा रक्षाꣳसि नाष्ट्रा अभिजघाꣳसन् यक्ष्यध्वे न यक्ष्यं तꣳस्यध्व इति ॥ २ ॥

ते देवा इन्द्रमब्रुवन् । त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्वमिमानि रक्षाꣳसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति

---

* '०स्फ्ययानुदेहि —इति क, ख, ग ।

तथेति तस्मै वै बृहस्पतिं द्वितीय मकुर्व्वन् ब्रह्म वै बृहस्पतिस्त ऽइन्द्रेण चैव बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳫंसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञ मतन्वत ॥ ३ ॥

तद्वा ऽएतत् क्रियते। यद्देवा अकुर्व्वन्निदं नु तानि रक्षाᳫंसि देवैरेवापहतानि यत्त्वेतत् करोति यद्देवा ऽअकुर्व्वंस्तत्करवाणीत्यथो ऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳫंसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः। एष सो ऽप्रतिरथो ऽथ यः स बृहस्पतिरेष स ब्रह्मा तद्ब्रह्मा प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाᳫंसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते॥ तस्माद् ब्रह्माप्रतिरथं जपति * ॥ ५ ॥

आशुः शिशानो वृषभो न भीम इति† । ऐन्द्र्यो ऽभिरूपा द्वादश भवन्ति द्वादश मासाः

* 'जपति'—इति क । † 'इति'—इति क, ख ।

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्वज्रेणासुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्व्वज्रो* वै त्रिष्टुब्वज्रेणैवैतद्वज्रेणासुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति ता द्वाविꣳशतिर्भवन्ति सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म हि† ॥ ६ ॥

अथैनमुद्यच्छति‡ । उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः§ ॥ ७ ॥

अथाभिप्रयन्ति । पञ्च दिशो दैवीर्य्यज्ञमवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्वस्पर्द्धन्त ते देवा असुराणां दिशो ऽवृञ्जत तथैवैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते दैवीरिति तद्देना दैवीः कुरुते‖ यज्ञमवन्तु दैवी-

* 'त्रिष्टुभिर्व्वज्रो'--इति क ख ।
† 'हि'—इति क, 'हि'---इति ग, घ ।
‡ 'मुद्यच्छति'—इति क ।
§ 'बन्धुः'—इति ङ।
‖ 'कुरुते'—इति ग ।

रिति यज्ञ मिमं भवन्तु देवीरित्येतदपामतिं दुर्मतिं बाधमाना इत्यशनाया वा ऽअमतिरशनाया मप-बाधमाना इत्येतद्रायस्पोषे यज्ञपतिं माभजन्तो-रिति रय्यां च पोषे च यज्ञपतिं माभजन्तीरित्ये-तद्रायस्पोषे ऽअधि यज्ञो ऽअस्थादिति रय्यां च पोषे चाधि यज्ञो ऽस्थादित्येतत् * ॥ ८ ॥

समिद्धे ऽअग्नावधि मामहान इति। यज-मानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणीड्य इति यज्ञिय इत्येतद्गृभीत इति धारित इत्येतत्तप्तं घर्मं परिगृह्यायजन्तेति तप्तए ह्येतं घर्मं परिगृह्यायजन्तोर्जा यद्यज्ञ मयजन्त देवा इत्यूर्जा ह्येतं यज्ञ मयजन्त देवाः † ॥ ९ ॥

दैव्याय धर्त्रे जोष्ट्र ऽइति। दैवो ह्येष धर्त्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया इति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञ मायन्निति परिगृह्य ह्येतं देवा यज्ञ मायन् देवा

* 'ऽस्थादित्येतत्'—इति ग, घ।

† 'देवाः'—इति ग, घ।

देवेभ्यो ऽअजयन्तो ऽअस्त्वित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तो ऽस्त्वित्येतत् ॥ १० ॥

व्वीतꣳ हविः शमितꣳ शमिता यजध्यै ऽइति । इष्टꣳ स्विष्ट मित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचो ऽन्वाह ब्रह्मा दक्षिणतो ऽप्रतिरथं जपत्येष ऽएव तुरीयो यज्ञस्ततो व्वाका आशिषो नो जुषन्ता मिति ततो नो व्वाकाश्चाशिषश्च जुषन्ता मित्येतत् * ॥ ११ ॥

सूर्य्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयाँ† अजस्र मित्यसौ वा ऽआदित्य एषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात् सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति व्विद्वानिति पशवो वै पूषा त ऽएतस्य प्रसवे प्रेरते सम्पश्यन् विश्वा भुवनानि गोपा इत्येष वा ऽइदꣳ

---

* 'मित्येतत'—इति ग, घ ।

† 'ज्योतिरुदयाँ२॥'—इति क, 'ज्योतिरुदयाँ२'— ति ख
'ज्योतिरुदयाँ१॥—इति ङ ।

सर्व्वं सम्पश्यत्येष ऽउ ऽएषास्य सर्व्वस्य भुवनस्य गोप्ता * ॥ १२ ॥

तद्या ऽअमुष्मादादित्यादर्व्वाच्यः पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणां महद्भुतायो ता ऽएवैतत् समारोहंस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽयो ता ऽएवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्द्देवा ऽइतः सम्प्रापवंस्तथैवाभिरय मेतदितः सम्प्राप्नोति † ॥ १३ ॥

अथाश्मानं पृश्निमुपदधाति । असौ वा ऽआदित्यो ऽश्मा पृश्निरमुमेवैतदादित्यमुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि तमन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति‡ तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥

---

* 'गोप्ता'—इति ग, 'गोप्ता'—इति च।

† 'सम्प्राप्नोति'—इति क।

‡ 'दधाति'—इति क।

माग्नीध्रवेलायाम् । अन्तरिक्षं वा ऽआग्नीध्र मेतं तदन्तरिक्षे दधाति तस्मादेषो ऽन्तरिक्षायतनो व्यध्वे व्यध्वे ह्येष इतः * ॥ १५ ॥

स एष प्राणः । प्राण मेवैतदात्मन् धत्ते तदेतदायुरायुरेवैतदात्मन् धत्ते तदेतदन्न मायुर्ह्येतदन्न सु वा ऽआयुरस्मा भवति स्थिरो वा ऽअस्मा स्थिर मदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम् ॥ १६ ॥

स उपदधाति । विमान एष दिवो मध्य ऽआस्त ऽइति विमानो ह्येष दिवो मध्य ऽआस्त ऽआपप्रिवान्रोदसी अन्तरिक्ष मित्युद्यन् वा ऽएष ऽइमांल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताची रिति स्रुचश्चैतदेदीयाहान्तरा पूर्व्व मपरं च केतु मित्यन्तरेमञ्च लोक ममु ञ्चेत्येतदयो यच्चेद मेतर्हि चीयते यच्चादः पूर्व्व मचीयतेति ॥ १७ ॥

उक्षा समुद्रो ऽअरुणः सुपर्ण ऽइति । उक्षा ह्येष समुद्रो ऽरुणः सुपर्णः पूर्व्वस्य योनिं पितुराविवेशेति पूर्व्वस्य ह्येष एतं योनिं पितुराविशति

* 'इतः'—इति ग, घ ।

मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्यन्ताविति विक्रममाणो वा ऽएष ऽएषां लोकानामन्तान्पाति ॥ १८ ॥

द्वाभ्यामुपदधाति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदुपदधाति त्रिष्टुब्भ्यां* त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः प्राण ऽएष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत् ॥ १९ ॥

अथोपायन्ति† । इन्द्रं विश्वा ऽअवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ आ च वक्षत्सुम्नहूर्यज्ञ ऽआ च वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यज्ञदग्निर्देवो देवांश्च ऽआ च वक्षदिति यक्षच्चैवाग्निर्देवो देवाना वहत्वित्येतत्‡ ॥ २० ॥

---

* त्रिष्टुभ्या—इति क, ख, ङ।

† 'अथोपातिष्ठन्ति'—इति क, ख, ङ।

‡ 'वहत्वित्येतत्'—इति ग, घ।

वाजस्य मा प्रसवः। उद्ग्राभेणोदग्रभीत् अथा सपत्नानिन्द्रो मे निग्राभेणाधराँ२॥ ऽअकरिति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

उद्ग्राभं च निग्राभं च। ब्रह्म देवा अवीवृधन् अथा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यता मिति यथैव यजुस्तथा बन्धुः ॥ २२ ॥

तद्या अमुष्मादादित्यादूर्ध्वास्ततन्नी दिशः। ता एतद्देवा असुराणां समवृञ्जताथो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा अतः सम्प्राप्नुवंस्तथैवाभिरय मेतद्यजमानः सम्प्राप्नोति * ॥ २३ ॥

अथाग्निं समारोहन्ति। क्रमध्व मग्निना नाक मिति स्वर्गो वै लोको नाकः क्रमध्व मनेनाग्निनैतꣳ स्वर्गं लोक मित्येतदुख्यꣳ हस्तेषु बिभ्रत

* 'संप्राप्नोति'—इति क।

इत्युद्यच्छ ह्येत ऽएतद्ध हस्तेषु बिभर्ति दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्व मिति दिवस्पृष्ठꣳ स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्व मित्येतत्* ॥ ॥ २४ ॥

प्राची मनु प्रदिशं प्रेहि विद्वानिति । प्राची वै दिगग्नेः स्वा मनु प्रदिशं प्रेहि विद्वानित्येतदग्ने रग्ने पुरो ऽअग्निर्भवेहेत्यस्य त्व मग्नेरग्ने पुरो ऽग्नि† र्भवेहीत्येतद्विश्वा आशा दीद्यानो विभाहीति सर्व्वा आशा दीप्यमानो विभाहीत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पद ऽइत्याशिष माशास्ते ॥ २५ ॥

पृथिव्या ऽअहम्‡ । उदन्तरिक्ष माऽरुह मन्तरिक्षा-द्दिव माऽरुह मिति गार्हपत्याद्वाऽऽग्नीध्रीय मागच्छ-त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य पृष्ठात्स्वर्ज्योति-

---

* 'मित्येतत्'—इति ग, घ ।

† 'पुरो अग्नि'—इति क, 'पुरोग्नि'—इति ख घ ।

‡ 'पृथिव्याहम्'—इति क, 'पृथिव्या ऽअहम्'—इति ख, ङ, 'पृथिव्या अहम्'—इति ग ।

रगामहे मिति दिवो नाकस्य पृष्ठात्स्वर्गं लोक-मगामहे मित्येतत् * ॥ २६ ॥

स्वर्यन्तो नापेक्षन्ते । आ द्याꣳ रोहन्ति रोदसी ऽइति न हैव ते ऽपेक्षन्ते ये स्वर्गं लोकं यन्ति यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर ऽइत्येष एव यज्ञो विश्वतोधार एत ऽउ ऽएव सुविद्वाꣳसो य ऽएतं वितन्वते † ॥ २७ ॥

अग्ने प्रेहि प्रथमो देवयता मिति । इम मेतदग्नि माह त्व मेषां प्रेहि प्रथमो देवयता मिति चक्षुर्देवाना मुत मर्त्याना मित्युभयेषाꣳ हैतद्देव-मनुष्याणां चक्षुरियक्षमाणा भृगुभिः सजोषा इति यजमाना भृगुभिः सजोषा इत्येतत्स्वर्यन्तु यजमानाः स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ‡ ॥ ॥ २८ ॥

तद्या अमुष्मिंल्लोके पञ्च दिशः । ता एतद्देवा

---

* 'मित्यैतत्'—इति ग, 'मित्येतत्'—इति घ।

† 'वितन्वते'—इति ग, 'वितन्वते'—इति घ।

‡ 'स्वस्तीत्यैतत्'—इति ग, घ।

ऽसुराणां महज्जतायो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते ऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा यातः सम्प्राश्नुवंस्तथैवाभिरयमेतद्यातः सम्प्राप्नोति* ॥ २९ ॥

अथैनमभिजुहोति। एतद्वा ऽएनं देवा ईयिवांऽसमुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैनमयमेतदीयिवांऽसमुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्लवत्सा तस्या असावादित्यो वत्सः स्वेनैवैनमेतद् भागेन स्वेन रसेन प्रीणात्युपरि धार्य्यमाण उपरि धार्य्यमाण उपरि हि स य मेतत् प्रीणाति दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैनमभिजुहोति। शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत् प्राणं दधाति यथा स्वयमातृण्णा मभिप्रचरेदेव मभिजुहुयात् प्राणः स्वयमातृण्णा रस एष शिरश्च तत् प्राणञ्च रसेन सन्तनोति

* 'सम्प्राप्नोति'–इति ख।

सन्दधाति नक्तोषासा समनसा विरूपे ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥

अग्ने सहस्राक्षेति। हिरण्मयशकलैर्व्वा ऽएष सहस्राक्षः शत मूर्द्धन्निति यदद्रः शतशीर्षा रुद्रो ऽसृज्यत शतं ते प्राणाः सहस्रं व्याना इति शतꣳ हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वꣳ साहस्रस्य राय ईशिषऽ इति त्वꣳ सर्व्वस्य रय्या ऽईशिष ऽइत्येतत्तस्मै ते विधेम वाजाय स्वाहेत्येष वै वाजस्तमेतत् प्रीणाति ॥ ३२ ॥

द्वाभ्या मभिजुहोति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदभिजुहोति * ॥ ३३ ॥

अथैनं निदधाति। सुपर्णोऽसि गरुत्मानित्येतद्वा ऽएन मदो विकृत्या सुपर्णं गरुत्मन्त विकरोति तꣳ सुपर्णं गरुत्मन्तं चिनोति तꣳ सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति पृष्ठे पृथिव्याः

---

* 'मेतदभिजुहोति'—इति ख।

सीद भासान्तरिक्ष मापृण ज्योतिषा दिव मुत्तभान तेजसा दिश उद्दृꣳहेत्येवꣳ ह्येष एतत् सर्व्वं करोति*॥ ॥ ३४ ॥

आजुह्वानः सुप्रतीकः पुरस्तादिति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने स्वं योनि मासीद साधुयेत्येष वा ऽअस्य स्वो योनिस्तꣳ साध्वासीदेत्येतदस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्निति द्यौर्व्वा ऽउत्तरꣳ सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्द्देवैः सह यजमानꣳ सादयति द्वाभ्यां निदधाति तस्योक्तो वस्तुर्व्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥

अथास्मिन्त्समिध आदधाति । एतद्वा ऽएनं देवा ईयिवाꣳस मुपरिष्टादन्नेनाप्रीणन्त्समिद्भिराहुतिभिश्च तथैवैन मय मेतदीयिवाꣳ समुपरिष्टादन्नेन प्रीणाति समिद्भिराहुतिभिश्च †॥ ३६ ॥

---

* 'करोति'—इति क।

† 'आहुतिभिश्च'—इति ग, घ।

स वै शमीमयीं प्रथमा मादधाति। एतद्वा ऽएष एतस्या माहुत्याऽ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिंऽस्यादिति त ऽएताऽ शमी मपश्यंस्तयैन मशमयंस्तद्यदेतऽ शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताऽ सवितुर्व्वरेण्यस्य। चित्रा माहं वृणे सुमतिं व्विश्वजन्याम् या मस्य कण्वो ऽअदुहत् प्रपीनाऽ सहस्रधारां पयसा महीं गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान् कामान् दुदुहे * ॥ ३८ ॥

अथ वैकङ्कती मादधाति। तस्यां उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं व्वा ऽअवरऽ सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदुहे' इति क।

स वै शमीमयी प्रथमा मादधाति। एतद्वा ऽएष एतस्या माहुत्याऽ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिंऽस्यादिति त ऽएताऽ शमी मपश्यंस्तयैन मशमयंस्तद्यदेतऽ शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताऽ सवितुर्व्वरेण्यस्य। चित्रा माहं व्वृणे सुमतिं व्विश्वजन्याम् या मस्य कण्वो ऽअदुहत् प्रपीनाऽ सहस्रधारां पयसा मह्रीं गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा सर्व्वान् का-मान् दुदुहे * ॥ ३८ ॥

अथ व्वैकङ्कती मादधाति। तस्या उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं व्वा ऽअवरऽ सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदुहे' इति क।

मित्येष वा ऽअस्य स्वो योनिस्त्वं यत्र ऽइत्येतत्* स्वे हवीꣳषि जुहुरे समिद्ध ऽइति यदा वा ऽएष समिध्यते ऽथैतस्मिन् हवीꣳषि प्रजुह्वति ॥ ३९ ॥

अथौदुम्बरीमादधाति। ऊर्ग्वै रस उदुम्बर ऊर्जैवैन मेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः पशुभिरेवैन मेतदन्नेन प्रीणाति यदि कर्णकवतीं न विन्देद्दधिद्रप्स मुपहत्यादध्या-त्यद्दधिद्रप्स उपतिष्ठते तदेव पशुरूपं मेषो ऽअग्ने दीदिहि पुरो न इति विराजादधात्यन्नं विरा-डन्नेनैवैन मेतत् प्रीणाति तिस्रः समिध आदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-दन्नेन प्रीणाति † ॥ ४० ॥

अथाहुतीर्जुहोति। यथा परिविष्यानुपाययेत् ता दृक्तत् स्रुवेण पूर्वे स्रुचोत्तरा अग्ने त मद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् ऋध्यामा त

* 'इत्येतत्'—इति ग घ।

† 'प्रीणाति'—इति क।

ऽओहैरिति यस्ते हृदिस्पृकस्तोमस्त न ऽऋध्यास-मित्येतत् पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्च-चितिको ऽग्निः पञ्च ऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति * ॥ ४१ ॥

अथ वैश्वकर्म्मणीं जुहोति । विश्वकर्म्मायमग्निस्त मेवैतत् प्रीणाति चित्तिं जुहोमि मनसा घृतेनेति चित्त मेपां जुहोमि मनसा च घृतेन चेत्येतद्यथा देवा ऽइहागमन्निति यथा देवा ऽइहागच्छानित्येतद्वीतिहोत्रा ऋतावृध ऽइति सत्यवृध ऽइत्येतत्पत्ये विश्वस्य भूमनो जुहोमि विश्वकर्म्मण ऽइति योऽस्य सर्व्वस्य भूतस्य पतिस्तस्मै जुहोमि विश्वकर्म्मण ऽइत्येतद्विश्वाहादाभ्यᳬ हविरिति सर्व्वदेवाचितᳬ हविरित्येतत् † ॥ ४२ ॥

* प्रीणाति – इति ख ।

† 'हविरित्येतत्'—इति ग, 'हविरित्येतत'—इति च ।

अथ पूर्णाहुतिं जुहोति। सर्व्वं मेतद्यत् पूर्णं सर्व्वेणैवैन मेतत् प्रीणाति ॥ ४३ ॥

सप्त ते ऽग्ने समिध इति। प्राणा वै समिधः प्राणा ह्येतꣳ समिन्धते सप्त जिह्वा ऽइति यान्न्मूंस्तान् पुरुषानेकं पुरुष मकुर्व्वंस्तेषा मेतदाह सप्त ऽऋषय ऽइति सप्त हि त ऽऋषय आसन्त्सप्त धाम प्रियाणीति छन्दाꣳस्येतदाह छन्दाꣳसि वा ऽअस्य सप्त धाम प्रियाणि सप्त होत्रा. सप्तधा त्वा यजन्तीति सप्त ह्येतꣳ होत्राः सप्तधा यजन्ति सप्त योनीरिति चितीरेतदाहापृणस्वेत्या* प्रजायस्वे-त्येतद्घृतेनेति रेतो वै घृतꣳ रेत ऽएवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञिय मेवैतदिदꣳ सकलं सर्व्वं करोति ॥ ४४ ॥

सप्त सप्तेति। सप्तचितिकोऽग्निः सप्त ऽर्त्तवः सव्वत्सरः सव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् प्रीणाति तिस्र आहुतीर्जुहोति

* पिपारेतिपाठान्तरं यद्वा —इति ख ।

विष्टुग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति तिस्रः समिध ऽआदधाति तत् षट् तस्योक्तो बन्धुः ॥ ४५ ॥

तिष्ठन्त्समिध ऽआदधाति* । अस्थीनि वै समिधस्तिष्ठन्तीव वा ऽअस्थीन्यासीन आहुतीर्जुहोति माꣳसानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्यन्तराः समिधो भवन्ति बाह्या ऽआहुतयो ऽन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि† ॥ ४६ ॥

अथातः सम्पदेव‡ । षट् पुरस्ताज्जुहोति षडुपरिष्टात् षड्भिरात्मनः पृश्निर्यन्ति द्वाभ्यां मश्मानं पृश्नि मुपदधाति चतुर्भिरग्निर्यन्ति पञ्चभिरग्निमारोहन्ति तदेका न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी द्वाभ्यां मग्निं निदधाति तद्द्वात्रिꣳशद्द्वात्रिꣳशदक्षरानुष्टुप्सैषानुष्टुप्§ ॥ ४७ ॥

* 'ऽद्याद्धाति'—इति ख ।

† 'माꣳसानि—इति ग, माꣳसाणि—इति ख, ङ,

‡ 'सम्पदेव'—इति ग घ ।

§ '०नैवानुष्टप —इति ग ०सैवानुष्टुप—इति घ ।

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासा मेता मथैका माहरन्ति तद्यदेता मत्राहरन्त्यत्रैष सर्व्वो ऽग्निः संस्कृतः स ऽएषो ऽत्र तस्मै नान्न मासीद्यदन्न मत्स्यत् * ॥ ४८ ॥

सो ऽग्नि मब्रवीत् । त्वयान्न मदानीति तथेति तस्माद्यद्दैवैत मत्राहरन्त्यथैषो ऽत्त मन्नायात्त माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽआहुः । प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं व्वेद हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन्नय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाꣳ श्रियꣳ रसꣳ समुदौहन्नेष स य मेत मत्राग्नि माहरन्ति तद्यदेत मत्राहरन्ति य एवैतेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्यो रसस्त मेत-

---

* 'मात्स्यत्'—इति ग, 'मात्स्यत्'—इति घ।
† 'भवति'—इति क।

द्दर्शए स मुदूहन्ति तद्दश्यैतच्छिर उद्यात्माय मग्नि-
श्चित उद्यात्मान मेवास्यैतत् संस्कृत्य शिरः प्रति-
दधाति ॥ ५१ ॥ २ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

इत्थ मग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत् प्रणी-
गौपयिकीः (१) * क्रियाः कर्त्तुं तदुचितं सम्प्रैष माह,—
"अथातः समेष्यतीति। प्रणेष्यमाणाग्नि सिध्यर्थं गार्हपत्ये
प्रचितं काष्ठमिध्मस्तदुद्यच्छ † अग्निधारणार्थं मधस्तात् क्रिय-
माणाः सिकता उपयमन्यः ताश्चोपयच्छेति ‡ एतदुभयं प्रति-
प्रस्थातारम्. प्रत्युच्यते। हे होतः प्रणीयमानायाग्नये अनु-
ब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि। हे अग्नीत् पराच्यास्फा-
रैखया § अनुगच्छ ‖। हे ब्रह्मन् 'आशुः शिशान' इत्येतद-

* 'तत्समायाथोपयिकीः'—इति क, 'तत्प्रायथौपयिकीः'—इति ग, भ,
'तत्सायाथोपयिकी'—इति ण।

† 'काष्ठमिकातंदुद्यच्छ'—इति क, 'काष्ठमिकातंदुद्यच्छ'—इति भ,
'प्रचितं काष्ठमिकां तदुद्यच्छ—इति ण।

‡ 'ताश्चोभयच्छताः कुरुत'—इति ज-पुस्तके।

§ 'अर्धराया (एकरूपया?)—इति क, भ।

‖ का० श्रौ० सू० १८ ३ १६।

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः। गार्हपत्ये सम्पादयन्ति तासा मेता मचैका माहरन्ति तद्यदेता मवाहरन्त्यत्रैष सर्व्वो ऽग्निः संस्कृतः स ऽएषोऽत्र तस्मै नान्न मासीद्यदन्न मात्स्यत् * ॥ ४८ ॥

सो ऽग्नि मब्रवीत्। त्वयान्न मदानीति तथेति तस्माद्यद्दैवैत मत्राहरन्त्ययैषो ऽन्न मन्नायान्न माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽआहुः। प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं वेदा हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मत्राहरन्ति। यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन्नय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाए श्रियए रसए समुदौहन्नेष स य मेत मत्राग्नि माहरन्ति तद्यदेत मत्राहरन्ति येवैतेषाए सप्तानां पुरुषाणाए श्रीर्यो रसस्त मेत-

* 'मात्स्यत्'—इति ग, 'मात्स्यत्'—इति घ।
† 'भवति'—इति क।

देवैरेव सम्पादितं तस्मात्सरितार्थत्वादेतत् कर्म यद्यपि न करणीयं तथापि यदेतत् कर्म करोमीति तद्देवा यद्कुर्वन् करवाणीति धिया क्रियते न तु रक्षसामपहननार्थं तस्य तु देवैरेव सम्पादितत्वात् । किञ्च स्वय मपि चैतेन इन्द्रेण बृहस्पतिना च दक्षिणभागस्थितान्यायकानसुरान् रक्षांसि चापहत्या नाष्ट्रे ऽभये ऽदेशे एनं यज्ञं कृतवान् भवतीति । ननु देवाः पूर्वं इन्द्रबृहस्पतिभ्यां रक्षांस्यपजघ्निरे तदस्तु प्रकृते क इन्द्रः को वा बृहस्पतिः कथं वा ताभ्यां रक्षसामपहननं यत उक्त मुपपद्यत इत्याह ॥ ४ ॥

"स यः स इति । पूर्वं दक्षिणभागे रक्षांस्यपहतानिन्द्रः परासृष्यते । स य इन्द्रोऽस्ति स एष अप्रतिरथस्त इत्यर्थः ॥ ५ ॥

अप्रतिरथ मैन्द्रात्मकत्वमुपपादयति — "आशुः शिशान* इति । (मन्त्रप्रतिपाद्याया देवताया मन्त्रस्य वा भेदात् आशुः शिशान इत्यादिका ऐन्द्रं ऋग्भिरूपा सदृशा भवन्तीति इन्द्रत्वेन स्वीकर्त्तुं सुविता भवन्तीति अर्थः । अप्रतिरथसूक्तस्थाना मृचां द्वादश सङ्ख्याया आत्मानः सकाशादसुरा रक्षांसि चापहन्यन्त इति प्रशंसति । † ) "द्वादश भवन्तीति । तासां छन्दः प्रशंसति — "त्रिष्टुभि रिति । त्रिष्टुभो वज्रत्वं वज्रिणेन्द्रेण सहोत्पत्तेः सा चोत्पत्ति स्तैत्तिरीयके श्रूयते — "उरसो बाहुभ्यां पञ्चदशं निरमिमीत मिन्द्रो देवतान्व सृज्यतत्

* वा० सं० १७ ३३ ।

† बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ख-पुस्तकान्तरेषु ।

प्रतिरथाख्यं सूक्तं * जपेति एवं तत्र तत्र व्यापारे तं तं 'सम्प्रेष्यति' विनियुञ्ज्यादित्यर्थः। अत्र सम्प्रैष "ब्रह्मन् प्रतिरथम् जपेति' यदुक्तं तस्योपयोग मभिधातुं इराकल्प मवतारयति ॥ १ ॥

"एतद्वा इति। एतस्मिन् काले खलु एत मग्निं चयनाख्यं यज्ञं सम्भरमाणान् करिष्यमाणान् इडभावस्थादयः (?) अतएवाग्निविहारसमीपे गच्छतो देवान् दक्षिणभागेन एका 'असुरा रक्षांसि'त्येन नीडार्थव्यत्ययेन लट्-प्रत्ययः। 'न यजध्वं' न विस्तारयध्व मिति। इन्तु मैच्छन् देवानां यज्ञं विहन्तु मिच्छन्नित्यर्थः ॥ २ ॥

अथास्तैर्देवै रस्माकं मध्ये त्वमेव भगवत्तमो बलवत्तमय बलिष्ठय वीर्यवत्तम इति। अतस्त्वमिमानि रक्षांसि प्रतिपक्षं कुरुष्वेत्युक्ते इन्द्रेण मे ब्राह्मणो द्वितीयोऽस्त्वित्युक्ते तथैव कुर्म इति। बृहस्पतिर्ब्राह्मणस्तेनामिन्द्रस्य द्वितीयं मकुर्वन्; तथा कृत्वा ते देवा इन्द्रेण बृहस्पतिना च दक्षिणतो दक्षिणभागे नागतानसुरारक्षांसि अपहत्य अपाघ्न अतएवाभये प्रदेशे एनं यज्ञं समकुर्वत ॥ ३ ॥

"तद्वा एतद्" इत्यादिकस्याय मर्थः,— देवाः पूर्वं यत् कर्माकुर्वन् एतस्मिन् कालेऽपि तदेव क्रियते खलु इद मिति। अपहननक्रियाविशेषणं इदं रक्षसा; मवहनन पूर्वं

* वा॰ सं॰ १७ ३३—४४।

त्रिष्टुप्छन्दः इति। अथवा वीर्यवत्त्वात्त्रिष्टुभो वक्षलं वीर्यवत उरःप्रदेशनो निर्माणात्। अतएव श्रुतं,— त्रिष्टुप् छन्दो बृहत्साम राजन्यो मनुष्याणा मविः पशूनां यस्मात्ते वीर्यवन्तो वीर्याद्ध्यसृज्यन्तेति। ननु प्रकृतस्याग्निकर्मत्वात् तत्रैतासामैन्द्रीणा मृचा मसमवेतार्थं त्वमित्यादित्यत आह,— "ता द्वाविंशति रिति। चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशताक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति। अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशति गायत्र्यआग्नेय्यो * भवन्ति अग्निना सहोत्पन्नत्वात्। अतएव श्रूयते,— "स मुख तस्त्रिवृतन्निरमिमीत त मग्निर्देवता च सृज्यत गायत्रीछन्दस इति, प्रकृतञ्च कर्माग्निसम्बन्धि भवति। तत् प्रणयनात्मकत्वात्। अतस्ता ऋच ऐन्द्योऽपि छन्दः सम्पत्तिद्वारा प्रकृतिकर्म समवेतार्था एवेत्यर्थः॥ ६॥

इत्थं ब्राह्मणकृतत्याप्रतिरथ सूक्त † जपस्योपयोग मुक्त्वाग्नेश्चयमन ‡ समन्त्रकं विधत्ते— "अथैन मिति। "उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरित्यादिना § उद्यच्छेत्यर्थः।

---

* 'गायत्र्यस्ताश्च येय्यो (? ०गाय त्र्यश्चाग्नेय्यो)'—इति छ, झ।

† 'अप्रकृतस्याऽप्रतिरथसूक्त'—इति झ, 'अप्रकृतस्याप्रतिरथसूक्त'—इति ज।

‡ का० श्रौ० सू० १८ १. १८।

§ वा० सं० १७ ५१।

तस्य मन्त्रस्य ब्राह्मणं प्रागुक्त मित्याह— "तस्योक्तो बन्धु रिति ॥ ७ ॥

उद्यमनानन्तरं * अध्वर्युप्रभृतीनां चित्यं प्रति † गमनं विधत्ते ‡— "अयेति। अत्र "पञ्चदिशी दैवि § रित्यादिभिः पञ्चभि र्ऋग्भिराग्नीध्रपर्यन्तं गच्छन्ति। अतस्ता ऋचः क्रमेण व्याचष्टे— "देवाश्चासुराश्चेत्यादिना प्राजापत्या देवाश्चासुराश्चेत्युभये दिग्विजये स्पर्द्धां कृतवन्तः; पश्चाद्देवा असुराणां दिशो वृञ्जन्त. ततोऽमूषां स्वाधीनीकृतवन्तः। मन्त्रे पञ्चदिशी दैवीरित्यादिभिः पञ्चभि र्ऋग्भि राग्नीध्रपर्यन्तं गच्छन्ति। अतस्ता ऋचः क्रमेण व्याचष्टे,— "यज्ञ मवन्त्वित्यनेन तथैव यजमानोऽपि द्वेषं कुर्वतो भ्रातृव्यस्य दिशं स्वाधीनाः करोति। "दैवीरित्यनेन एता दिशो देवसम्बन्धिनीः कुरुते। असुरेभ्य उपगमय्य देवैः स्वाधीनीकृतत्वाद्दैवीरित्यनेन तथैव सम्पादितवान् भवतीत्यर्थः। "यज्ञ मवन्तु दैवीत्यनेन प्रकृतस्यैव यज्ञस्यावनं विवक्षित मिति दर्शयति,— "यज्ञ मित्र मिति। अमतिशब्दस्याशनेच्छार्थ इति व्याचष्टे— "अपामतिमिति। अशनायोदन्येत्यादि ‖

* 'उद्यमनानन्तरम्'—इति क।

† चित्यं प्रति [ आग्नीध्रपर्यन्तं ]'—इति क।

‡ का० श्रौ० सू० १८ ३ १६।

§ वा० सं० १७ ५४।

‖ "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु"—इति पा० सू० ७. ४ ३४।

रुचेष्याघनाया शब्दः क्यजन्तो निपातितः। रायस्पोष इति धने तद्विषये पोषेचेति वस्तु मभिप्रेत मित्याह,— "रायस्पोष इति रायस्पोषे अधीत्यत्रापि तथैव विवक्षित मित्याह,— "राय-स्पोषे अधीति यजमानस्यैव पूजकत्वात् ॥ ८ ॥

"मामहान" शब्दो यजमानपर इत्याह,— "यजमानो वा इति। अनिरुक्थानि स्तोत्रशस्त्राणि पत्रवदङ्गानि भवन्त्यस्मिन्निरुक्थपत्र इत्याह,— "उक्थपत्र इति। यतो देवाः 'तप्त घर्मं' घर्मलक्षणं अग्निं 'परिगृह्णाय यजन्त'; अत उच्यते मन्त्रे,— 'तप्तं घर्मं' इत्याह— "तप्त घर्म मिति। उत्तरवाक्य मप्येव मेव व्याचष्टे,— "ऊर्जेति। 'ऊर्जा' आज्यदधिपयःप्रभृति ता-रसेनेत्यर्थः ॥ ९ ॥

अग्निर्देवसम्बन्धित्वाद्धारयद्वत्वाज्जोपयितृत्व मत्वाचाग्निरेव 'देव्यायेत्यादिनोच्यत इति। दैव्यायेति उत्तरवाक्यद्वयं प्रसि-द्धार्थं मित्याह,— "देवश्रीरिति परिगृह्णेति 'देवा देवेभ्य इत्यध्वर्यन्त' इत्येतत् पदं व्याचष्टे,— "अध्वरो वा इति। अध्वर्यन्त इति "कव्यध्वरपृतनस्यर्चि लोप इति" * अकार-लोपः ॥ १० ॥

"वीतं अभित" मित्यस्य पदद्वयस्यार्थं माह,— "इष्टं स्विष्ट मिति। अध्वर्युहोतृब्रह्माणो यथास्थानं यथायथं मन्त्रं जप एव 'तुरीयो यज्ञ' इति व्याचष्टे,— "अध्वर्युः पुरस्तादिति 'वाका-भिन्न' इत्यनयोः शब्दयोः समानाधिकरणशङ्का निवारयति।

---

* पा० सू० ७. ४ ३९।

"ततो नो वाकायाग्निपयेति । एतस प्रणीयमानस्याग्नेरादित्यात्मकत्वात् ॥ ११ ॥

स एव प्रणीयमानाग्निलक्षणः सूर्यस्येव रश्मिभि र्युक्तो हरितवर्ण 'केशः' तेजोरूपः सविता भनवच्छिन्नं पुरस्तादेतदुदयच्छति । भतो मन्त्र इम मेवार्थं माचष्टेत्याह,— "सूर्यरश्मिरिति। क्षणः पशुजनकत्वेन 'पूषा' इति पशव्यः उच्यते वाग्नयेरनुज्ञायां प्रवर्त्तन्त इत्ययमर्थः मन्त्रभागेन विवक्षितः इत्याह,— "पशवो वा इति। 'प्रेरन्त' इति ईरगतौ * विल्यस्यादादिकस्य लिटि बहुवचने रूपम् । भग्नेः प्रजापत्यात्मकत्वेन सर्वस्यापि दृष्टत्वाद्रक्षितत्वाच्च ततायं 'सम्यश्यवि त्यादि मन्त्रभागः समवेतार्थ मित्याह,— "सम्यश्यन्निति। देवा दीव्यन्त देवसम्बन्धिन्यः पञ्चदिशः,भमति. मगनेच्छा दुर्मति भशास्त्रीमां मतीर्बाधबाधमानाः भग्ने मद्विषये पोषं च यज्ञपतिं सम्बन्धिन्य एनं प्रणीयमानाग्निः लक्षणं यज्ञ मवत्तु मस्मादिति "छन्दसि लुङ् लङ् लिट"-इति लोड़र्थे लुङ् प्रत्ययः † किञ्चाय मपि यज्ञः भग्ने तत् योषेचाधितिष्ठत्विति प्रथममन्त्रस्याय मर्थः। सम्यग्दीप्ते भग्नौ प्रणीयमाने मामहानेत्यर्थं पूजको यजमानोऽधिकारभावेनानुगच्छति । उक्थ्यान्येवाङ्गानि यस्य स उक्थपत्र ईद्य स्तुत्यो यज्ञियो यागवाग्निरध्वर्युणाधारितः किञ्च देवास्तमं धर्मात्मकं त मग्नि

---

* "ईर गतौ कम्पने च"– भ० भा० १०१८ धा० ।

† पा० सू० ३ ४ ६ ।

परिगृह्याय यजन्त स्तुमत्वादेव च यज्ञरूपं तं आज्यादि-
हविर्लक्षणेनानेनाग्रमयन्तेति द्वितीयस्यार्थः । होमसम्बन्धिने
धारयितृतेजोपयितृतमायाग्नये हविर्दानार्थं तत् प्रणयनं क्रियत
इति वाक्य शेषः । किञ्च यो देवश्रीः श्रियन्त इति श्रियः
देवाः श्रियो यस्य स तथोक्तः ; भक्तेभ्यः श्रियं दातुं मनो यस्येति
श्रीमनाः, शतानि पयांसि यस्यासौ शतपयाः, तं अग्निं
परिगृह्य देवाय जनःप्रदेशं गतवन्तः । गत्वा च देवा ऋत्विग्भि
र्वा देवेभ्यो यज्ञ मिच्छन्तः स्थितवन्त इति तृतीयस्यार्थः ।
"शमितेति तृतीयैकवचनस्य सु इत्यादेशः । स मिता चान्यर्थं
यागाय हविः वीतं इष्टं यत्र यस्मिन् प्रणयनप्रदेशे हव्यं हव-
नार्हं मन्नि मध्वर्य्यादीनां मन्त्रं पपावाक् तुरीयो यज्ञो गच्छति
तथाविधानात् तस्माद्ग्ने ऋग्यजुस्सामलक्षणानि वाक्यानि चाधि-
पश्चनोऽस्माच्च उपमन्ता मिति चतुर्थस्यार्थः । सूर्यस्य रश्मिभि-
र्युक्तो हरितवर्णकेशः ज्योतिरूपः प्रणीयमानोऽग्निलक्षणः सविता
धनवच्छिन्न मुदयच्छति । तस्याग्ने रनुयातां यन्ते महिमानं
विद्वान् पूषा याति ( तदुत्पाद्याः पशवः प्रवर्त्तन्त इत्यर्थः ।
किञ्च सोऽग्नि र्विश्वानि भुवनानि सम्पश्यंस्तेषां रक्षको भवतीति
पञ्चमस्यार्थः ) * ॥ १२ ॥

तयैवैतद्यजमानो भ्रातृव्यस्य हन्ता इति सामान्येनोक्तं सम्प्रति
ता एव पञ्चदिशो विभज्य दर्शयन् तासां मुख मस्मै स्वाधीन-

---

* मध्यगोचिह्नान्तः प्रदर्शितः पाठो नास्ति ख-पुस्तकादन्यत्र ।

तया प्राप्तिमाह— "तथा इति, तदिति। 'देवा' यस्मिन् काले 'असुराणां' दिशो वृञ्जत तस्य कालस्य परामर्शः एतच्छब्देनानन्तरोक्ता मन्त्राः परामृश्यन्ते। अहमुत्तमेभ्यो य ममितवन्तः समारोहयन् स्वाधिनो कृतवन्तः। "अथो इति। किञ्च देवा कं तस्मिन् काले 'एताभि' ऋग्भिः 'प्रातः' सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं समाप्नुवन् तद्देवाय मपि यजमानो भ्रातृव्यतीपगमय्यस्वाधिनो कृतास्ता पञ्चदिमः प्रातः मन्तरिक्षात्मकाग्नेरीशमण्डपपर्यन्तं सम्प्राप्नोति ॥ १२ ॥

उक्तै र्मन्त्रै माग्नोत्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मन उपधानं विधत्ते *— "अथेति। 'पृश्नि शब्देन चैत्य †' मुच्यते पृश्नेरश्मन ‡ उपधानेनादित्यस्यैवोपधानं भवतीत्याह। "असौ वा इति। आदित्यमण्डलसादृश्यप्रदर्शनेनोक्त मश्मनः प्रश्नित्व मुपपादयति। पृश्नि र्भवतीति तस्य चाश्मन उपधानं गार्हपत्याहवनीययो र्मध्ये कर्त्तव्य मित्याह,— "स अन्तरेणेति। गार्हपत्याहवनीययोरधस्तनोपरितनलोकद्वयात्मकत्वाल्लोकद्वयस्य च मध्ये सूर्यस्य तपनात् सूर्यात्मकस्याश्मनस्तत्रोपधान मुपपन्न मित्याह। ("अयं वै लोक इति। गार्हपत्याहवनीययो र्मध्यभागस्योपधान

---

* "आग्नीध्रदेशादुत्तरं पृष्ठ्यासमुच्छ्रितं पृश्न्यश्मान मुपदधाति"—इति का० श्रौ० सू० १८, ३, १६।

† "। श्वैत्य०" or "चैत्य० १" -इति क्व।

‡ "पृश्न्य०र्न तनुं हन्त पापाद्वा विचित्रवर्णं वा"—इति का० श्रौ० सू० १८, ३ २०।

स्थानतया विज्ञानादाग्नीध्रादन्यत्रापि तदुपधानं स्यादित्यत आह ॥ १४ ॥

"आग्नीध्रवेलाया मिति। 'वेला' शब्दः अवकाश माचष्टे। गार्हपत्याहवनीययोरवस्थानो) * परितन लोकात्मकयो मध्यवर्त्तित्वयाग्नीध्रस्यान्तरिक्षात्मकत्वं अध्व इव्यूर्द्धमार्ग उच्यते, तत्रैतस्या-श्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्द्ध्वं † मार्ग एव सूर्य्य स्तपतीत्यर्थः ॥ १५ ॥

अथ तस्याश्मन आदित्यात्मकत्वादादित्यस्य च प्राणात्मकत्वात्तदुपधानेनात्मनि प्राणादिधारणं सम्पाद्यत इत्याह,— "स एष इति। 'स' आदित्यात्मकादित्यरूपत्वात् आदित्यस्य च प्राणत्वं तदुपाय प्राणिन चेष्टन्ते—तदस्तमये तु न चेष्टन्त इति। अतएव श्रूयते— "यो सौ तपन्नुदेति। स सर्वेषां भूतानां प्राणा-नादायोदेति।०—०। असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणा-नादायास्तमेति इति ‡। प्राणत्वादेव वायुरूपत्वं प्राणिना मेव जीवनकालसम्बन्धात्। "आयुर्ह्येतदिति। एषो ह्मा यतः कारणा-दायु एतदिति नपुंसकलिङ्ग मायुरित्येतदपत्यं तस्यायु रवं तद्दता मेव भोक्तृत्वात्। अत एतदन्न' तस्मात् तदुपधानेन स्वकीय मात्मनि प्राणादीन् धारितवान् भवति ॥ १६ ॥

अथ तस्योपधाने मन्त्रद्वयं प्रदर्शयद् व्याचष्टे,— "स उप-

---

* वन्वनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।
† 'प्रदेशद् ऊर्ध्वं ?'—इति ङ, 'प्रदेशाद्दूर्ध्वं'—इति च।
‡ तै० ब्रा० १. १४. १।

दधाति विमान एष *" इति। 'हि' यस्मात्कारणात् 'एष' सूर्यो-ऽभूत यामस्य निर्माता द्युलोकस्य मध्ये आस्ते, अत उक्तं,— 'विमान' इति उदयमानः सूर्यः पृथिव्यादीन् स्वप्रकाशेनापूरयतीति। त मर्थं माहेति व्याचष्टे,— "आप प्रिवानिति। 'प्रा पूरणे' †— इत्यस्माद्वर्त्तमानार्थस्य लिटः क्वस्वादेशः। 'विश्वाचीष्टताची पदाभ्यां विश्वेषां भूतानां ‡ च व्यापनात् वेदयः सुवन विचचस्व इत्याह,— "स विश्वाचीरिति, "पूर्वं मपर मिति। पृथिवी द्युलोकसाधीयन्ते, किञ्च 'पूर्वं' मित्यनेन पूर्वं'चितो गार्हपत्या उच्यते,— अपर मिति अनेनेदानीं चीयमान आहवनीय इति व्याचष्टे,— "अन्तर पूर्वं मिति ॥ १७ ॥

द्वितीय मन्त्रे,— "उक्षा समुद्रः §। ( पूर्वत्वाद्योनिं" मध्ये दिवस इति पादत्रयार्थः प्रसिद्धा इत्याह। "उक्षा समुद्रो अरुण इति चतुर्थपादे रजः' शब्देनैते लोका )‖ विवक्ष्यन्त इत्याह,— "विचक्रम इति। भूत यामस्य निर्माता द्यावा पृथिव्या अन्तरिक्षं वा समन्तात् पूरयन् एष सूर्यो द्युलोकस्य मध्ये तिष्ठति; किञ्च स सूर्यो पूर्वापरश्च केतुं लोक मन्त-

---

* वा० सं० १७ ५८।

† धा० आ० १०६१ धा०।

‡ विश्वेषां हविषां हता'—इति भा,

§ वा० सं० १७. ६०।

‖ बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकाख्ये।

"वाजस्येति" "उद्ग्राभश्चेति" मन्त्रद्वयं * निगदव्याख्यात मित्याह,— "वाजस्य मा प्रसव इति। पञ्चदिश्यो दैवीरित्यादिभि र्मन्त्रै र्गार्हपत्यादाग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धिनीः सूर्योदर्वाचीः। पञ्चदिशस्ततो गमय्य स्वयं प्राप्तवान् भवतीति उक्तम् ,—

अथ "इन्द्रं विश्वा अवीवृधन्" इत्यादिभि र्मन्त्रैराग्नीध्रादाहवनीयं पर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीर्यतस्तो दिश स्तथैव प्राप्नोतीत्याह ,— "तथा अमुष्यादित्यादिना — "भ्रात इति द्युलोकपर्यन्त मित्यर्थः ॥ २१, २२, २३ ॥

चित्याग्नि समीपगमनानन्तर † क्रमध्व मित्यादिभिः पञ्चभि र्मन्त्रै ‡ स्तस्यारोहणं विधत्ते §— "प्रयाग्नि मिति। चित्याग्निरुपरिधार्यमाणे उख्याग्नौ होमविधानेन तत्र तदा वचनार्थे कस्याश्चिदपेक्षणादग्निनिधाने यजमानस्यापि निधानात् तदपेक्षा मारोहन्तीति बहुवचनम्। "स्वर्गो वै लोको नाक." इत्यादिनारोहणमन्त्राम् व्याचष्टे— "क्रमध्व मिति ॥ तेषा मेव परोक्षाभिधानम्, 'अनेनाग्निना' चित्याग्निना 'एतम्' इत्यभिनयेन निर्देशः 'एतं स्वर्गं' क्रमध्वं अपरतिविधं न गच्छतीत्येतदुक्तं भवतीत्यर्थः। एते क्रममाणा अध्वर्युप्रभृतयः एन मुख्याग्निं हस्तेषु बिभ्रतः धारयन्तः अतः रक्षा एवार्थो सम्बेण प्रतिपाद्यते।

---

* वा० सं० १७. ६३, ६४। † 'गमनानंतरं'—इति ख, ग।

‡ वा० सं० १७. ६५—६९।

§ "क्रमध्व मग्निनेति चित्यमारोहन्ति।"—इति का० श्रौ० सू० १८. ३. १।

‖ वा० सं० १७. ६५।

"दिवस्पृष्टं स्वर्गंलोक मित्यनेन मन्त्रे 'स्वर्गत्वा' इत्यत्र स्वरित्यस्यार्थ उक्तः। अत्र 'दिव'-शब्देन द्युलोक उच्यते, द्युलोकस्य पृष्टं उपरितनं स्वर्गं सुखातिशयहेतुं तस्यैवस्थानविशेषां गत्वा देवैभिर्देवैर्मिश्राः संयुताः सन्तस्तिष्ठतेत्यर्थः। 'दिवस्पृष्ट' मिति षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सकारः ॥ २४ ॥

प्राची * वे दिगग्ने रिति। प्राचीदिगग्नेः सम्बन्धिनी खलु अतएव तैत्तिरीयकं— "प्राचीदिक् अग्निर्देवता"-इति †। "अस्य त्व मिति। अस्येष्टका स्थलरूपस्याग्ने त्वं पुरोवर्त्तमानोऽग्निर्मवेदं यज्ञे इत्युक्तं भवति। "दीप्यमान इति। दीप्यते इत्यस्यार्थकथनम् ॥ २५ ॥

"पृथिव्या अह ‡ मिति। गार्हपत्यस्याग्नीध्राहवनीयानां पृथिव्यादिलोकत्रयात्मकत्वात् क्रमेण तथागमनात् पृथिव्यादिलोकत्रयं क्रमेण रूढावानस्मीत्यर्थः। 'आरुह' मिति "तन्दरुचिभ्य श्छन्दसि-इति पुरुडादेशः" § "दिवो नाकस्येति। नाकस्य सुखहेतुभूतस्य द्युलोकस्य 'पृष्ठात् ज्योतिर्विंशिष्टं' प्रकाशमानस्वर्गं लोक 'मगामह' मित्येतदुक्तं भवति। अत्रापि पूर्ववत् सुखातिशयहेतुभूतो द्युलोक देव्यविशेषः स्वर्गशब्देनोच्यते ॥ २६ ॥

"न ह्येवेति। ये स्वर्गंलोके यन्ति ते फलान्तरमपेक्षन्ते खलु, अत उक्तं स्वर्यन्त ‖ इति। एष एवेति सर्वेण प्रका-

---

* वा॰ सं॰ १७ ६६ ।        † तै॰ ब्रा॰ ३. ११. ५ १ ।

‡ वा॰ सं॰ १७ ६७ ।        § पा॰ सू॰ ३. १. ५२ ।

‖ वा॰ सं॰ १७ ६८ ।

रेष जगद्धारयतीति। 'एष एव यज्ञो विश्वतोधारः' येन एवं यज्ञं वितन्वते एत एव सुविद्वांसः खलु विदुषा मेव यज्ञ निष्पादकत्वादित्यर्थः ॥ २७ ॥

"प्राचे प्रेहीति*। "इम मेतदिति। 'त्व मेषां' देवान् प्रत्युमिच्छतां 'प्रथमः' प्रेहीति इम मुख्याग्नि माह-अग्नेज्येष्ठत्वर्वेदुपकारत्वात्। 'इयक्षमाणा' इति व्याख्यातं यजमानं भृगुभिरितिस्पष्ट मन्यत्। उक्त मन्त्रव्याख्येन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना आत्मसम्बन्धिनीः पञ्चदिशः पूर्वतः प्राप्तवान् भवतीत्याह ॥ २८ ॥

"तथा अमुष्मिंल्लोक इति। अत्रापि 'प्राचः' इति द्युलोकादुपरितन स्वर्गावधित्वेनोच्यते ॥ २९ ॥

चित्याग्निसमारोहणानन्तर मग्निचुत्यमी होमं विधत्ते। "अथेति। अभि जुहोति अभिहोमेनेप्सित मत्वादेन मिति कर्मणि द्वितीया विहिता। आहुतिरियं मामस्याग्ने उपरिष्टादग्नं सम्पाद्यत इत्याह— "एतद्वा इति। विहिते होमे द्रव्यं विधत्ते— "कृष्णायै श्वेतवत्सायै पयसा" † इति, उक्तलक्षणाया गोः पयस उपादाने कारण माह— "रात्रि र्वा इति। रात्रि खलु कृष्णाश्वेतवत्सायारात्रेरसावादित्ये वत्सः यथा गोः समीपे वर्तते तद्वदस्य रात्रिसमीपे वर्तमानत्वात्। अथ मैत्रायं तैत्तिरीयके श्रूयते— "अग्नियादित्यरात्रेर्वत्सयेति आदित्य"-इति। एवञ्चास्यानेदादित्यात्मकत्वात् तथाविधाया गोः पयसा होमे स्वर्लोकमारोन तदेव विधियते,— "स्तेन

* वा० सं० १७ ६८। † का० श्रौ० सू० १८. ४. ९।

रक्षनेति। तन प्रीणितवान् भवति, प्रीणयितस्यादित्यात्मकस्याग्नेरपा एव वर्त्तमानत्वेनोपधार्यमाण स एवोष्माग्नो जुहुयादित्याह,— "उपरीति। प्रकृतहोमे साधारणं जुहः प्राप्नोतीति तदपवादत्वेनदोहनं विधत्ते— "दोहनेनेति। दोहनेन हि पयः प्रदीयत इति दोहनात्मकं पक्षान्तरे दोहनेने खलु पयः प्रदीयत इत्यर्थः॥ ३०॥

प्रकृत मेवातिहोमं प्रकारान्तरेण प्रशंसति— "यद्देवेति। अग्नेः शिरोवत् प्राधान्यात् सच्छिरसं पयसः प्राणत्वं तत् पुष्टिहेतुत्वात्। "यथा स्वयमातृणा मिति। होमावसरे स्वयमातृणाया उपरि किञ्चिद्यथा 'प्रचरेत्' तथा होमं कुर्यात्; एवञ्च स्वयमातृणायाः प्राणत्वात्। अग्नेस्तु शिरस्त्वात् प्राणश्च शिरयेत्युभे अपि ययो सद्यौन रसेन सन्तनोति तदेव विवृणोति 'सन्दधाति' परस्परसम्बन्धं करोतीत्यर्थः। प्रकृतहोमो मन्त्रौ दर्शयन् तत्र प्रथममन्त्रस्यब्राह्मण षष्टकाण्डे प्रागेवाभिहित मित्याह— "नक्तोषासेति*॥ ३१॥

---

* वा० सं० १७ ७०।

"स्वयमातृणा मध्यग्निं धारयन् शुक्लवत्सा पयसाभिजुहोति कृष्णाया दोहनेन स्वयमातृणा मवसिञ्चन्नक्तोषासेति। स्वयमातृणाया उपरि धारयन्नग्निम् कृष्णायाः गोः शुक्लवत्सायाः पयसा दोहनेनाभिजुहोति स्वयमातृणा मवसिञ्चन्। स्वयमातृणाया उपरि प्रतिप्रस्थाता स निधग्निं धारयन् स्वक्रयेन पात्रेण जुहूस्थानीयेन जुहोति।"

— इति का० श्रौ० सू० १८ ४ २२।

द्वितीयं मन्त्रं व्याचष्टे— "अग्नेः सहस्राक्षेति* हिरण्य शकलैर्वा इति। प्रक्षष्टोऽग्निः प्रोक्षणे विनियुक्तैः† सहस्रसङ्ख्याकैः‡ हिरण्यशकलैः सहस्राक्षः खलु, अतश्च मन्त्रे तथा सम्बोध्यत इत्यर्थः। प्रकाशकत्वसाधारण्येन हिरण्यशकलानामक्षित्वोपचारः। "यदद: शतशीर्षेति। प्रजापतिशब्देनोचितेष्वस्तु अन्तवर्त्तमानेन अन्यौ प्रतिष्ठितेषु तेषु स एव शतशीर्षो रुद्रः समभूदिति काण्डस्यादावुक्तम्। अतोऽत्राह: अ-शब्देन सकाल: परामृश्यते अतोऽस्मिन् काले "शतशीर्षाऽरुद्रो सृज्यतेति। यत अत उक्तं मन्त्रे शतमूर्द्धन्निवतीत्यर्थः, यः शतशीर्षा भवति तस्य शतसङ्ख्याकाः प्राणाः सहस्रसङ्ख्याकाः व्यानाश्च भवन्ति। शतं सहस्र मित्यपरिमित नामधेयम्। तस्मादुच्यते,—" शतं त इति। त्वं सर्वस्मै इति। 'सहस्र' मित्यपरिमित सङ्ख्यावचनात् सहस्रस्येत्यनेनापरिमित सङ्ख्यावत इत्यस्यार्थस्याभिधानात् सर्वस्या इत्येतदुक्तं भवति। सहस्रेति लिङ्गव्यत्ययः "अधीगर्थदयेशाङ्कर्मणि"§-इति षष्ठी प्राप्तौ पष्ठ्यर्थे चतुर्थी वक्तव्येति। 'सर्वस्मै राय इति चतुर्थी। "एष वै वाज इति। 'वाज'-शब्दोऽन्नवाची तद्धेतुत्वादेवो ऽग्निर्वाजः खलु अतस्तस्मै विधेम वाजाय स्वाहेत्यनेन तमग्निं प्रीणाति। हे सहस्राक्षः शतमूर्द्ध अग्ने। ते शतसङ्ख्याकाः

---

* 'वा० सं० १७. ७१।

† इदेव पुरस्तात् का० ८. ७४. ७।

‡ 'इयंख्याकै;'—इति ह अ, ण।

§ पा० सू० २. ३. ५२।

मायाः सहस्रसङ्ख्याकाः व्यानाय भवन्ति ; त्वं सर्वस्य धनस्य 'ईशिषे' ईश्वरो भवति ; तस्मै अग्नहेतुत्वे तदात्मकाय ते वयं परिचरेम । इदं हवि स्ते स्वाहुत मस्तु इति मन्त्रार्थः ॥ ३२ ॥

मन्त्रगतेन हित्वेन सकलस्याग्नेरभि होमः सम्पद्यत इति प्रशंसति ,— "द्वाभ्या मिति ॥ ३३ ॥

अग्नि होमानन्तर मुख्याग्नेयितीनां मुपरि निधानं विधत्ते— "अथैन मिति । निधानमन्त्रे "सुपर्णोऽसि * गरुत्मान् †" इत्यस्योपयोग माह । एतद्वा' इत्यादिना लोके हि योनौ सिक्तं प्रजननं समर्थं रेतो विक्रियते अवयवविभागवत् क्रियते । अतोऽत्रापि योनिरूपाया मुखाया संस्कृतस्याग्ने रेतःस्वरूपस्यापि विकृत्या भवितव्य मिति । पूर्वं विकृत्या विकृतिसाधनभूतेन मन्त्रेण "सुपर्णोऽसि गरुत्मान्" इत्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा विकृतवान् ‡ । तथा चयनकालेऽपि 'सुपर्णं गरुत्मन्तं' एव कृत्वा विकृतवान् ; सम्प्रति 'सुपर्णोऽसि गरुत्मान्' इत्यादिकेन 'सुपर्णं गरुत्मन्त'' कृत्वा निहितवान् भवति । चीयमानस्याग्नेः पक्षाकारेण चयनात् 'सुपर्णोऽसि गरुत्मान्' इत्युक्तम् । 'गरुत्मान्' प्रशस्तपक्षत्वात् , अतएव 'सुपर्णं' पर्ण-शब्देन

---

* "तस्या मग्नि निदधाति सुपर्णोऽसीति वषट्कारेण स्वयमातृण्णायां सुपर्णोऽसीति अनया वषट्कारेण चाग्निं स्थापयतीत्यर्थः ।"
—इति का० श्रौ० सू० १८ ४ ५ ६ ।

† वा० सं० १७ ७२ ।

‡ "विस्तवान्"—इति भा० ।

पतन सुपर्णे शोभनपतनविशिष्ट इत्यर्थः। "एवं ह्येष इति। (एष चग्निरेव सुभप्रकार मेतत् सर्वं करोति यतः पत उक्तं मन्त्रे पृथिव्याः सीदेत्यादीत्यर्थः ॥ १४ ॥

द्वितीयं मन्त्रं व्याचष्टे— "आजुह्वान इति।) * 'सुप्रतीकः' शोभनावयवः तत्र नितराम् प्रति न अपि तु प्रत्यान् मन्त्रो वेति व्याचष्टे— "प्र सु प्रतीक इति। अस्योत्याग्ने रेव चित्याग्निः स्वसम्बन्धिस्थानम्। अतोऽग्नेः 'स्वो योनि' मित्यादिना चित्याग्निं साध्वाधितिष्ठसे तदुक्तं भवतीति व्याचष्टे— "अग्ने स्वामिति अस्मामिति पृथग्भ्रन्तरिक्षाभ्या मुपरिवर्त्तमानत्वेन द्युलोकात्मकत्वात् 'अस्मिन्' चित्याग्निसधस्थे द्युलोके 'अध्यासीद इत्यर्थः। विश्वेदेवा इत्यनेन 'विश्वेदेवैः सह' त्वं यजमानं मन्त्रं सादितवान् भवति हे अग्ने! त्वम् गरुत्मान् अतएवं शोभनपतनोऽसि, साहम त्वं पृथिव्यां पृष्ठे उपविश्यस्व-दीयाभासो अन्तरिक्ष मापूरय ज्योतिषा दिवं दृढां कुरु तेजसा दिशोऽपि दृढो कुर्विति प्रथमस्यार्थः। भाः ज्योति स्तेज इति प्रकाशविशेषाः। हे अग्ने! त्वं पूर्वस्यां दिशि आह्वय-मानोऽस्माक शोभनावयवो भूयाः, अत त्वां योनिं चित्याग्निं साध्वक्रियया अधितिष्ठ साधुयेति तृतीयैकवचनस्य सुपां-सलुगित्यादिना यादेशः। अस्मिन् चित्याग्निरूपे उत्तरे सध-स्थेषु लोको अध्यासोद, हे विश्वेदेवाः! यूयं यजमानयात्र

---

* अन्धनीचिह्नान्तः पाठो नास्ति क-ग-पुस्तकयोरन्यत्र।

